❖ तत्रादौ केवलसमासः। समासः पञ्चधा। तत्र समसनं समासः।

- स च विशेषसंज्ञा विनिर्मुक्तः केवलसमासः प्रथमः॥
- प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावो द्वितीयः॥
- प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषस्तृतीयः तत्पुरुषभेदः कर्मधारयः। कर्मधारयभेदो द्विगुः॥ ३॥
- प्रायेणान्यपदार्थप्रधानो बहुव्रीहिश्चतुर्थः॥ ४॥
- प्रायेणोभयपदार्थप्रधानो द्वन्द्वः पञ्चमः॥

❖ **सूत्र- समर्थः पदविधिः॥**

पदसंबन्धी यो विधिः स समर्थाश्रितो बोध्यः॥

❖ **सूत्र- प्राक्कडारात्समासः॥**

कडाराः कर्मधारय इत्यतः प्राक् समास इत्यधिक्रियते ॥

## ❖ सूत्र - सह सुपा ॥

✓ सुप् सुपा सह वा समस्यते ॥ समासत्वात्प्रातिपदिकत्वेन सुपो लुक् । परार्थाभिधानं वृत्तिः। कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः। वृत्त्यर्थावबोधकं वाक्यं विग्रहः। सच लौकिकोऽलौकिकश्चेति द्विधा। तत्र पूर्वं भूत इति लौकिकः "पूर्व अम् भूत सु" इत्यलौकिकः। भूतपूर्वः। भूतपूर्वे चरडिति निर्देशात्पूर्वनिपातः। *(इवेन समासो विभक्त्यलोपश्च)*। वागर्थौ इव वागर्थाविव॥

**अव्ययीभावे शरत्प्रभृतिभ्यः ॥**

शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे। शरदः समीपमुपशरदम्। प्रतिविपाशम्। (*जराया जरश्च*)। उपजरसमित्यादि॥

| | |
|---|---|
| शरद् ङस् उप | अव्ययं विभक्तिसमीप......... |
| उप शरद् ङस् | उपसर्जनं पूर्वम् |
| उप शरद् | सुपो धातुप्रातिपदिकयोः |
| उप शरद् टच् (अ) | अव्ययीभावे शरत्प्रभृतिभ्यः |
| उपशरद सु | स्वौजसमौट्छस्टा..... |
| उपशरद अम् | नाव्ययीभावादतोऽम्त्वपञ्चम्याः |
| उपशरदम् | अमि पूर्वः |

